ॐ



# विश्वात्म दर्शनम्

## सुबोध वेदान्तज्ञान सूत्राणि

नव जिज्ञासूनां ज्ञानपथप्रदर्शकानि







ज्ञानाब्धिस्नातैः विद्वद्वरिष्ठैः
जगद्गुरुशङ्कराचार्य पदवीसमलङ्कृतैः
स्वामिवर्यकपिलेश्वरानन्द सरस्वती महोदयैरनुमोदितम्

काशी मुमुक्षु भवन स्थित सन्यासी पुस्तकालयाय सश्रद्धं समर्प्यते । विश्वरूपानन्दः

रचना—

स्वामी विश्वरूपानन्दः सरस्वती

मुमुक्षु भवनम्

काशी

लेखक : प्रकाशकश्च

**स्वामी विश्वरूपानन्दः सरस्वती**

मुमुक्षु भवनम्

काशी



प्रथम संस्करणम्—पञ्चशतमात्रम्



विक्रम संवत् २०५६, श्रावणीपूर्णिमा

आंग्लाब्दः १९९९ ई०

मूल्यम्—

ज्ञानं मननं निदिध्यासनं

तदनुरूपावृत्तिश्च



जगद्‌गुरु पदवी समलङ्‌कृताः

**स्वामी कपिलेश्वरानन्द सरस्वती महोदयाः**

मुमुक्षु भवनम्, काशी



डा. केदार नाथ त्रिपाठी 'दर्शनरत्नम्' भूतपूर्व अध्यक्ष, दर्शन विभाग
वाचस्पति ( डी. लिट् ) काशी हिन्दू विश्वविद्यालय
अध्यक्ष, काशी विद्वत् परिषद् निवास संकेत- प्लाट नं० ५५
जानकी नगर कालोनी
(ककरमत्ता) वाराणसी-१०
दूरभाष- ३२२१४०
दिनांक ३०-३-२०००

'विश्वात्मदर्शनम्'

[ अभिनवा कृतिः ]

प्रतीयमानं विश्वमात्मैवेति दर्शनं=साक्षात्कार एवान्तिमः सारो वेदानाम् । वेदान्तसागरादुद्भूता सुधाविन्दुरिवेयं विश्वात्मदर्शनाभिधाना ऽभिनवाकृतिः स्वामिवर्याणां मन्थनफली भूतेति परमप्रमोद विषयः । शास्त्राणि सूत्रतया भाष्यतया च द्वेधा प्रवृत्तानि दृश्यन्ते-सूत्राद् भाष्यम्, भाष्याच्चसूत्रमिति । अस्यामेवपरम्परायामस्या अन्वर्थाभिधानायाः कृतेः सूत्रात्मकतया रचना कृतेति मन्ये ।

नूनं गहनीयेयंकृतिः स्वामिवर्याणां विद्यातपोऽनुभूतिमूर्तीनां श्रीमद् विश्वरूपानन्द सरस्वती महाभागानामिति नितरां प्रमुदितमना निवेदयन् नाहमतिशये । इतिशम् ।

केदार नाथ त्रिपाठी
राष्ट्रिय पण्डितः
राष्ट्रपति सम्मानितः

चैत्र कृष्ण दशम्यां गुरौ
२०५७ वि० स०

।।ॐ।।

# ।। विश्वात्म दर्शनम् ।।

## सुबोध वेदान्त ज्ञान सूत्राणि
## नव जिज्ञासूनां ज्ञान पथ प्रदर्शकानि

काशी सुमेरुपीठाधीश्वरविद्वद्वरिष्ठ
जगद्गुरुस्वामिवर्य कपिलेश्वरानन्द
सरस्वती महानुभावैरनुमोदितम्

रचना-
दण्डीस्वामी विश्वरूपानन्द सरस्वती
मुमुक्षुभवनम् काशी

मुद्रक :- पवनपुत्र प्रिण्टिंग प्रेस, वाराणसी, फोन : 319934
कम्प्यूटर कम्पोजिंग - मॉडर्न कम्प्यूटर्स, वाराणसी, फोन : 314752

॥ॐ॥

## आत्म निवेदनम् -

महामान्या प्रज्ञाः जिज्ञासवश्च, अविज्ञातो ह्यादिदेवस्सर्वैः। अनुमीयते वर्ण्यते च महद्भिः, नावगम्यते तथापि। छिद्रेण पश्यतः कथमब्धिविस्तार दर्शनं सुलभम्? लघु छिद्रसमैवास्माकं बुद्धिः। सर्वात्मा सर्वरूपः सर्वव्यापकः कथमनुमानगम्यः स्यात् तथापि सर्वैर्निगद्यते स्व ज्ञानानुसारम्।

ब्रह्माण्डं महत्। विचित्रेयं कृतिस्तस्य। गुणमयं विस्तारम्। सर्वत्र ज्ञाताज्ञातरूपा विविधाकृतयः। जडश्चेतनो वा, स्थावरोजङ्गमो वा, पर्वतोऽब्धिर्वा, सर्ववैचित्र्य पूर्णम्। चकिताः श्रमितास्सर्वे वर्णने।

सर्वव्यापकः सर्वं पश्यति शृणोति अनुभवति यथायथं सम्पादयति दयते ददाति हरति व्यापाद-

यति समुत्पादयति च। परं नावलोक्यते कर्ता।

सर्वतः पाणिपादञ्च, सर्वतोऽक्षि शिरोमुखम्।
सर्वतः श्रुतिमंल्लोके, सर्वमावृत्य तिष्ठति।।
इति गीतायां श्रीकृष्ण वाक्यम्।

यद्यपि नावगम्योऽसौभगवान्, तथापि वर्ण्यते हि गुणानुरूपस्वभावानुमितः।

नेति नेतीत्यन्ते सर्वेषां वचनम्। नान्तत्वाद् ब्रह्मणः।

वेदैक प्रतिपाद्यः वेदान्तैक समधिगम्योऽसौ भगवान्। योगेन योगिनः परयानुरक्त्या भक्तास्तं पश्यन्ति।

तस्मिन् दृष्टे सर्वदर्शनं, तत् प्रसादादलौकिकोऽनुभवः, सर्व लौकिकालौकिक ज्ञानं च भवतीति सत्यम्। सर्वज्ञाः सर्वालौकिक कर्तृत्व सम्पन्नाः सिद्धाः महात्मानोऽवलोक्यन्ते विश्वेऽस्मिन्।

हृदाकाशे स्थितोऽसौ परमात्मा। तेन हिदृष्टिरध्यात्मिकं ज्ञानं चाप्यायते देहिभिः। मनसश्शान्तिस्तत् कृपा। अमृतलोपलब्धिः तल्लोक प्राप्तिश्च योगिनां भक्तानामपि तदाशिषा एव।

तन्मायया हतबुद्धयः सर्वेऽपि संसारिणः। इत्थं हि जगच्चलति, यद्यपि दुःखमयं हीदम्। अशान्तिरेव दृश्यते सर्वत्रापि। काम क्रोधादि वशीभूत महङ्कार गृहीतं जगद् धावतीतस्ततः। अशान्ता ह्येवेयं संसृतिः।

संयमेन शरणागति भावेना कर्मवृत्त्यासङ्गेन मनसाऽऽराधितव्यः ध्यातव्यः ज्ञातव्यश्च सर्वव्यापी। भक्तानां भक्तस्सः। सांसारिक मपि तेषामयं संसाधयति इति श्रुतं दृष्टं च बहुभिः। नैव त्यजत्यनुगतान्। ज्ञानमपि सम्पादयति हृदि।

मत्वैतद्धि सूत्ररूपं विश्वात्मदर्शनमिदं

ग्रथितम्। न स्वाध्यायपराः ज्ञानावाप्तये जनाः। सुविज्ञाश्चाल्पतराः हि कालेऽस्मिन्। अर्थ प्रधानोऽयं युगः सर्वानर्थमयः। कुतोऽर्थ सिद्धिरिति सर्वेऽनुधावन्ति। ज्ञानालोकः क्वचिद् दूरे दृष्ट इव।

तमः कृष्णमेघ इव सर्वच्छादनपरम्। ज्ञानिनो भयान्विताः, न भवेज्ज्ञानस्यलोप इति चिन्तयमानाः। अर्थासुरः कालमेवाश्नाति। अभावे कदा ज्ञान चिन्तन मिति प्रश्नायते। अनुभूयैतत् सूत्रमय मुच्च ज्ञानं निवेदितम्।

अतिवीर्यवतीव भेषजे बहुरल्पीय सि दृश्यते गुणः इति भारविः।

प्रबोधप्रदसूत्राणि सुबोधानिचालोकत्रय परकाणि जिज्ञासूनां मार्ग दर्शकानि भगवत् प्रेरणयैव समुल्लिखितानि, नतु स्वल्प बुद्धि निर्गतानीत्येव सत्यम् । लघूनि सूचितार्थानि

स्वल्पाक्षर पदानि च। सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः।।

इति युक्ति दीपिकायाम् ।

कियन्मात्रमस्य निर्वाहोऽत्रेति विदुषामेव समालोचन विषयः। परमपि ज्ञान विज्ञान-सम्पन्नानां विदुषा माशीर्वादोहि लक्ष्यसाधक इति मत्वा विरमामि।

*आभारज्ञापनम् -*

परमाभार महंमन्ये ऊर्ध्वाम्नाय काशी सुमेरुपीठाधीश्वराणां विद्वद्वरिष्ठानां जगद्गुरु शङ्कराचार्य पदवी समलङ्कृतानामनन्त श्री विभूषितानां स्वामिनां कपिलेश्वरानन्द सरस्वती महानुभावानां, यैर्विश्वात्म दर्शनस्यास्य सिद्धान्त सम्पादनं महता कृपया सद्भावेन च विहितम्।

सततं स्मरणीयानां धर्मावताराणां करपात्रि स्वामिनां शिष्याणामौदार्य परम्परा भूषणानां

विविध धर्म ग्रन्थ लेखकानां स्वामिवर्य शिवानन्द सरस्वती महोदया नामेवमेव विद्वद्वरेण्यानामनेक शास्त्र विज्ञानां चानेकोत्तमग्रन्थ लेखकानां परमादर्याणां श्रीमतां केदारनाथ त्रिपाठि महोदयानां चाभारं, येषां प्रेरणया चाशीर्वादेन सूत्रग्रन्थमिदं पूर्णतां प्राप्तम्।

विद्वद्वरेण्यानां ज्ञानाब्धि स्नातानामुदार भावानां परम विनम्राणा मवधूत परम्परावतां श्रीमतां रघुनाथानन्दानामप्याभारं मन्ये, यैरस्य भाषासम्पादनं सुयत्नेन विहितम्।

चतुर्णामप्येतेषां दयालुता सदैव स्मरणीया ननु यतः ग्रन्थस्यास्य समीचीनता यातेति शम्।

भावत्कः -

दण्डी स्वामी विश्वरूपानन्द सरस्वती

मुमुक्षु भवनम् काशी

मकर संक्रान्तिः वि० सं० 2055

# विषयानुक्रमणिका

॥ ॐ ॥

## ॥ विश्वात्म दर्शनम् ॥

*प्रणति निवेदनम् -*

विश्वात्मकं विश्वमयं च विश्वं,
विश्वस्यकर्तारमविश्वज्ञेयम् ।
विश्वाधिपं विश्वस्वरूपमाद्यं
विश्वाश्रयं विश्वधरं नमामः ॥

## अथ विश्वात्मालोकः

*तत्र पूर्वंविश्वात्म स्वरूपम् -*

अथ विश्वात्म दर्शनम् ॥1॥

अखिलस्य परमात्मरूपत्वात् ॥2॥

दृश्यादृश्ययोरत्र समत्वम् ॥3॥

स्थूल सूक्ष्मयोरपि तथैव ॥4॥

नात्र जड चेतन भेदोऽन्तरायः ॥5॥

विनाशेऽशेष संसृतेरप्रतर्क्यशून्ये

ऽधितिष्ठत्यगुणोऽरूपोविश्वात्मा ।। 6।।

तत् सङ्कल्पाद्धि कर्तृत्वशक्तेरुत्पत्तिः ।।7।।

सा हिमायेति निगद्यते ।।8।।

एषा ह्यव्यक्तस्वरूपा चाविद्यात्मिका

बीजशक्तिः सर्वोत्पत्ति हेतुः ।।9।।

महदहङ्कार तन्मात्रा पञ्चभूताश्चास्याः

सन्ततयः ।।10।।

एवं ह्यव्यक्ताद् व्यक्तं सूक्ष्मात् स्थूलमदृश्याद्

दृश्यमगुणाद् गुणोत्पत्तिः ।।11।।

चेतनत्वं च सर्वस्य ।।12।।

वस्तुतस्त्वीश्वरो हि स्त्रष्टा द्रष्टा पालकः

विनाशकोऽपि ।।13।।

मायाजलतरङ्गवत् केवला ।।14।।

ब्रह्म स्वरूपा त्रिगुणात्मिका हिसा ।।15।।

भुवनद्रुमो भगवान् वासुदेवः ।।16।।

ब्राह्मणो जायमानत्वाद् विश्वं तत् स्वरूपम् ।।17।।

सर्वस्य तच्छक्ति साधितत्वात् ।।18।।

सुवर्णात् कङ्कणादिवत् वैकारित्वं केवलम्।।19।।

घट पटादीनां मृत् कार्पासजन्यवच्च ।।20।।

तत्त्वतः दृष्टे विश्वात्मनि विश्वरूपे न संसृति र्नवा प्रपञ्चः क्वापि ।।21।।

दृष्टि विभ्रमो हि केवलम् ।।22।।

मायाच्छन्नता कारणादज्ञानम् ।।23।।

अतो हि नारायणरूपे विश्वेऽस्मिन्जगद् दृष्टिः।।24।।

उत्तरक्षण बाधितत्वाज्जगतोऽसद्रूपत्वम् ।।25।।

स्वप्नवदनित्यत्वम् ।।26।।

मिथ्यात्वं चैतदेव ।।27।।

जगत् परमात्मनः प्रत्यक्षं स्वरूपम् ।।28।।

हृषीकेशत्वेनान्तर्यामी च सः ।।29।।

अप्रत्यक्षईशिता ।।30।।

सर्वस्य परमः सुहृत् ।।31।।

विश्वंतस्मिन् प्रतिष्ठितम् ।।32।।

उत्क्रमणे सर्व विलयः ।।33।।

त्रिकालाबाधितस्सः ।।34।।

एकः शिष्यते प्रलये, एकोविशिष्ये जगति ।।35।।

कालस्तस्मिन् प्रतिष्ठितः ।।36।।

मनसा तदाराधनम् ।।37।।

प्रणवेनावगम्यते ।।38।।

कर्मत्यागेनैकान्त वृत्त्याचिन्त्यमानेन च ।।39।।

तत् कृपयैव तद् दर्शनं ज्ञानेन ।।40।।

एषः पन्थास्तद् दर्शनाय ।।41।।

॥ ॐ ॥

## ॥ विश्वरूपः परमात्मा ॥

विश्वरूपो भगवान्नारायणः ॥1॥

ब्रह्माण्ड मशेषमात्मीकृत्यावतिष्ठति सः ॥2॥

काले काले सृजति विभर्ति गृह्णाति चोर्णनाभिवत्॥3॥

कालभयादयोऽपि विभ्यत्यस्मात् ॥4॥

स्वं बहुधा कुर्वन् भवति विश्वरूपः ॥5॥

दृष्टे हृदि सर्वभ्रान्तीनां षड्रिपूर्णां मनोवाक्काय दोषाणां परिसमाप्तिः ॥6॥

अन्तर्ग्रन्थिभेदश्च ॥7॥

काष्ठेऽग्निः गोष्वमृतं भूमौ गन्धान्नादिकं चोत्खन-नाज्जलं, रत्नादयः, वायौ प्राणमाकाशे शब्दमेवं विश्वात्मानन्तरूप धरः सर्वत्र विराजते॥8॥

सोऽगुणोऽरूपोनिर्लेपः सरूपस्सुरूपश्च ॥9॥

अविश्वो विश्वकृदसङ्गः सर्वपालकः अद्वेष्टा

सर्वभुगपि ॥10॥

अरसो मधुरः अगन्धः सर्वगन्धवान् अचक्षुष्कः-सर्वदर्शनः, अश्रोत्रः श्रोता, अदृश्योऽपि द्रष्टा स्प्रष्टा घ्राता श्रोता रसयिता मन्ताबोद्धा कर्त्ता च॥11॥

वृत्ति रहितोऽपि कारुणिकः ॥12॥

अरूपो विविध रूपाणां विधाता ह्यगुणो गुणानां जनकः ॥13॥

सहि चेतनः जडः मूढः ज्ञान विज्ञानरूपः तेजः स्वरूपश्च ॥14॥

अननुभूत्या ह्यज्ञान सन्ततयः ॥15॥

काम क्रोधाहङ्कादयो दुःख दौर्बल्यदीनतादिः मृत्युरपि ॥16॥

शुद्धेन मनसा तदाराधनं तदनुभूतयो मनसि॥17॥

ततो ज्ञान विज्ञानोदयः॥18॥

तत् कृपानुभूतिश्च ॥19॥

परं जीवस्य शिवत्वम्॥20॥

## ।। भगवान्नारायणः ।।

सोऽणुर्ज्योतिस्सहो बलम् ।।1।।

एकोऽपि खर्वः निखर्वः सर्वश्च ।।2।।

स्वयंभूस्सर्व व्यापकः ।।3।।

सर्व द्रष्टा परमकारुणिकः भक्तर्तिहरोऽपि सः।।4।।

द्रवित चेतसा तद् भाव भावितेन तदन्तिकत्वम्।।5।।

तद् वृत्तिस्तद्भावः तद् दृष्टिस्तच्चित्तस्तल्लोकं लभते।।6।।

सोऽप्यव्ययदेहो भवति ।।7।।

अदभ्रदयो हिरण्य गर्भः ।।8।।

उद्धर्ता चानुगतानाम् ।।9।।

मनसा पूजनं सततं स्मरणेन च ।।10।।

सर्वभूतदययाशु तुष्यति सर्वान्तरात्मा ।।11।।

अविस्मृतिस्तस्य सर्वाशुभध्वंसिनी ज्योतिदर्शिनी हृदि ।।12।।

तद् भक्तियोगस्तदाशिषा ।।13।।

प्राकट्ये हृदि भक्तोऽपि भगवत् सम एव ।।14।।

वस्तुतस्तु तद्भक्तास्ततोऽधिकाः ।।15।।

परम कारुणिक वृत्तिकारणात् ।।16।।

सर्वोद्धार परायण स्वभावाच्च ।।17।।

योगेन वानन्यभक्त्या लभ्यमानो भगवान्नारायणः।।18।।

भक्तिर्निरुपद्रवा चान्तरायहीना ।।19।।

असङ्गत्वं द्वयोरपि साध्यम् ।।20।।

एक तत्त्वाभ्यासी एक भक्तिर्वा भवेत् ।।21।।

ततो ह्येकत्वसिद्धिः ।।22।।

अद्वैतभावमेकत्वम् ।।23।।

एतन्मुक्तिपदम् ।।24।।

अनिर्वचनीयाखण्डशान्तिप्रदमविरलानन्ददम्।।25।।

अनन्तानुभूतियुतञ्च ।।26।।

एष स्पृहणीयः एषसेव्यः एषहि ध्येयो भगवान् हरिः ।।27।।

## ।। आत्मा ।।

आत्मा वै ब्रह्म हृदाकाशावस्थितः ।।1।।

सच ज्ञान विज्ञान रूपः साक्षी निर्गुणोऽपि ।।2।।

नित्यो ह्येषाजरोऽमरोऽसङ्गस्सूक्ष्मः ज्यायानपि।।3।।

अधूमो नित्य ज्योतिः परमः स्वयं प्रकाशः।।4।।

मायावरणाच्छादितस्य मनोदोषाहङ्कार-वतश्चास्य जीवत्वम् ।।5।।

ततः भय दुःख परिभवाभाव शोक दैन्यजन्याः द्वन्द्व भावाः ।।6।।

अज्ञानं मोहःदिग्भ्रमः दृष्टिदोषः सज्ज्ञान-राहित्यञ्च ।।7।।

कर्मबन्धात् संसारीकर्ता भोगीव ।।8।।

पुनर्भवत्वं चास्य विविधयोनिषु ।।9।।

कर्मत्यागात् कामक्रोधाहङ्कारादि विसर्जनात् संसारासक्तिनाशाच्च शुद्धिः ।।10।।

अष्टाङ्ग योगसाधना सर्वहृद् दोषहरा ।।11।।

दोषाभावे शुद्धोबुद्धः ज्ञान विज्ञानस्वरूपः ॥12॥

तुषेण बद्धो ब्रीहिः तुषाभावे तस्य तण्डुलत्वम् ॥13॥

मायाच्छन्नस्य जीवभूतस्य आत्मन एवं हि स्थितिः ॥14॥

भगवद् भक्त्या चास्य सर्वदोष विनाशः ॥15॥

सा चासङ्ग संयमपरा भवेत् ॥16॥

एक भक्तिर्विशिष्यते ॥17॥

ततश्च परमज्ञानोदयः ॥18॥

गुरौ श्रद्धा तत्कृपा च जीवभाव नाशिनी ॥19॥

अतः परं मोक्षः सच्चिदानन्दत्वञ्च ॥20॥

---

## ॥ माया ॥

माया प्रकृतिपुरुष युगलरूपा ॥1॥

विद्याविद्यात्मिका ज्ञानाज्ञानरूपा ॥2॥

तमः प्रकाशद्वया ब्रह्माब्रह्मणी ॥3॥

अजा चानजा बन्धमुक्ति हेतु भूता ॥4॥

साह्यखिलं जगत् ॥5॥

ब्रह्माण्डं व्याप्यावस्थिता ।।6।।

परिधावन्ति तया विमोहितास्सर्वे ।।7।।

देवासुरामर्त्याश्च ।।8।।

ज्ञानिनोऽज्ञानिनश्च ।।9।।

प्रबलाकर्षणशक्तिसम्पन्नेयम् ।।10।।

अज्ञेयानन्तालक्ष्याजैका नैकापीत्यथर्वण: ।।11।।

प्रकृतिस्वरूपा जडेयमिति वेदान्तिन: ।।12।।

ब्रह्मस्वरूपा नित्या सनातनी नारायणी शक्ति:।।13।।

यथात्मायथाशक्ति: यथाग्नि: दाहकत्वं च तस्या:।।14।।

सर्वकर्त्री शक्तिरियं ब्रह्मण: ।।15।।

ततोऽन्यत्वं नास्येति मनीषिण: ।।16।।

सम्यक्चिन्तनेऽभेद: ।।17।।

महामोहिनी जगदुत्पत्ति स्थिति संहार कारिणीयम्।।18।।

अनयाज्ञानाच्छन्नं मोहितं जगत् जङ्गम्य-
मानमनन्तकालात् ।।19।।

सौम्यासौम्यां परामपराञ्च मन्यन्ते प्रज्ञा: ।।20।।

आराधिता भोगदा मुक्तिदा चाकिञ्चनेभ्यः ।।21।।

प्रणम्येयं विश्वेश्वरस्य माया ।।22।।

## ।। अथ बोधालोकः ।।

*बोधार्थं प्रक्षिप्त सूत्राणि -*

1- शमादि सम्पत्   2- यमाष्टकम्

*शमादिसम्पत् -*

शम दमोपरति तितिक्षा समाधान श्रद्धाः षट्।।1।।

1- लौकिक व्यवहारान्मनसउपरमः शमः।।2।।

2- बाह्य करणानामुपरमो दमः ।।3।।

3- ज्ञानार्थं नित्यादि विहित कर्म सन्यासः उपरतिः।।4।।

4- शीतोष्णादि द्वन्द्व सहनं तितिक्षा ।।5।।

5- निद्रालस्य प्रमादत्यागेन मनसः स्थितिः समाधानम् ।।6।।

6- सर्वत्र आस्तिकता श्रद्धा ।।7।।

एतत् षट्कप्राप्तिः शमादिसम्पत् ।।8।।

- उपनिषदि

# ।। यमाष्टकम् ।।

*पातञ्जल योग दर्शनोक्तम् -*

लाभः- योगाङ्गानुष्ठानादशुद्धिक्षये
ज्ञानदीप्तिराविवेकाख्यातेः ।।1।।

नामानि - यम नियमासन प्राणायाम प्रत्याहार धारणा ध्यान समाधयोऽष्टावङ्गानि ।।2।।

*1- यमाः-* अहिंसा सत्यास्तेय ब्रह्मचर्या परिग्रहाः यमाः ।।3।।

*2- नियमाः -* शौच सन्तोष तपः स्वाध्यायेश्वर प्रणिधानानि नियमाः ।।4।।

*3- आसनम् -* स्थिरसुखमासनम् ।।5।।

*4- प्राणायामः -* तस्मिन् सति श्वासप्रश्वास-योर्गतिविच्छेदः प्राणायामः ।।6।।

*5- प्रत्याहारः -* स्व विषयासम्प्रयोगे चित्तस्वरूपा-नुकार इवेन्द्रियाणां प्रत्याहारः ।।7।।

पातञ्जलयोगदर्शने साधनपादे सूत्राणि, संख्या

28, 29, 30, 32, 46, 49, 54

चरतो चक्षुरादीनां विषयेषु यथाक्रमम्।
यत्प्रत्याहरणं तेषां प्रत्याहारः स उच्यते ।।

- इति योग चूडामणौ।

*6- धारणा -* देशबन्धश्चित्तस्य धारणा ।।8।।

*7- ध्यानम् -* ततः प्रत्ययैकता ध्यानम् ।।9।।

*समाधिः -* तदेवार्थमात्रनिर्भासं स्वरूप शून्यमिव समाधिः ।।10।।

पात. योगदर्शने विभूतिपादे सूत्राणि 1, 2, 3।

---

## ।। मौनम् ।।

मौनं वाक् तपः ।।1।।
चित्तवृत्ति निरोधकम् ।।2।।
सुविचारोत्तेजकम् ।।3।।
स्वाचरण पर्यवेक्षकम् ।।4।।
शुद्धिप्रदं शान्तिदञ्च ।।5।।

## ।। अकाम्यत्वम् ।।

अशेषेच्छाविरतिः परमं वैराग्यम् ।।1।।

वाञ्छा चित्तवृत्ति चाञ्चल्यहेतुः ।।2।।

भोगबुद्धिवर्द्धिका संसारासक्ति हेतुरपि ।।3।।

इयमशान्ति बीजरूपा मनोदोषोद्दीपिका ।।4।।

अनीहता विदुषा सुयत्नेन साध्या ।

ततः परं पूर्णाशान्तिः सन्तोषश्च ।।6।।

एतदकाम्यत्वम् ।।7।।

---

## ।। असङ्गत्वम् ।।

असङ्गत्वं दिव्यसिद्धिप्रदम् ।।1।।

आशाहीनोवृत्तिरहित एकाकी तिष्ठेत् ।।2।।

कुर्वन्नलिप्तः ।।3।।

गच्छन् स्थितसमः ।।4।।

गृह्णन्नमनस्कः ।।5।।

पश्यन्नद्रष्टा ।।6।।

शृण्वन्नश्रोत्रइव ।।7।।

सुप्तोऽपि जागृतार्थवान् ।।8।।

अमना ह्यबुद्धिर्जगद्भावे ।।9।।

सर्पनिर्ल्वयनीवत् ।।10।।

एतद्धि कैवल्यम् ।।11।।

## ।। प्राणायामः ।।

प्राणायामो मनोनिरोधकः ।।1।।

यथाशुकादयः पिञ्जरान्तः स्थापिताः ।।2।।

कुम्भक सिद्धेरत्र प्राधान्यम् ।।3।।

तत् श्वासात् परं प्रश्वासानुगतं वा भवेत् ।।4।।

पूर्णघट रिक्त घट समम् ।।5।।

द्वयोरपि कुम्भकं क्रमशोऽधिक कालगतं स्यात्।।6।।

मनसा प्राणस्य पर्यवेक्षणमिह ।।7।।

संयमिते प्राणे संयमोमनसः ।।8।।

शान्ते मनसि नैवापरं लभ्यं शेषम् ।।9।।

प्राणायामो बहु पङ्ककलङ्क शोधकः ।।10।।

स त्रिकालगतो भवेत् ।।11।।

शुद्धं मनोमणिः ॥12॥

ज्ञान प्रदीपकस्सर्व सिद्धिप्रदः ॥13॥

अतः प्राणायामोऽवश्यं करणीयः ॥14॥

---

## ॥ ध्यानम् ॥

सर्वेध्यानं समीहन्ते ॥1॥

कथं ध्यानमिति चिन्तनेऽज्ञाः ॥2॥

ध्यानं तु सप्तमो योगः ॥3॥

तच्च यम नियमासन प्राणायाम प्रत्याहार धारणानन्तरं सम्पाद्यते ॥4॥

मनसस्संयमो ध्यान साधकः ॥5॥

परानुरक्तिरीश्वरे च ध्यानसाधिका ॥6॥

नारदभक्ति सूत्राणि सहायकानि ॥7॥

सहसा ध्यान सिद्धिरनेक पूर्वजन्म संस्कारात्॥8॥

क्वचिदेव दृश्यते ॥9॥

ध्यानस्य विस्मृति र्हि समाधिः ॥10॥

सतत ध्यानेन नारायणस्तुष्यति ॥11॥

## ।। वासना ।।

मनोहि वासनालयः ।।1।।

सर्वास्तस्मिन् प्रतिष्ठिताः ।।2।।

मनसो बलेनैव बलिष्ठता तासाम् ।।3।।

वशीकरणं मनसो वासनानाशाय ।।4।।

वासनयाबद्धयते जनः ।।5।।

तासां प्रकर्षेण बुद्धेश्च प्रतिहतत्वम् ।।6।।

तन्नाशे हि विवेकोदयः तत्त्वागमश्च ।।7।।

भव भावो हि दुःखम् ।।8।।

तद् विसर्जनाच्छान्तिः ।।9।।

तदर्थं निःसङ्गत्वं चावश्यकम् ।।10।।

देहानित्यतानुभूतिः वासना प्रवर्तन रोधिका।।11।।

वासनानाशे दुर्वृत्तिनाशः ।।12।।

समस्त मनोविकार नाशश्च ।।13।।

ज्ञानोदयः विवेकप्राप्तिरपि ।।14।।

## ।। गृहम् ।।

गृहं बलवद् रज्जु बन्धनम् ।।1।।

माया बद्धा जनाश्चरन्त्यस्मिन् ।।2।।

जगदात्मस्वरूपस्त्वम् ।।3।।

त्यक्त देहात्मबुद्धिरात्म बुद्धिर्हि केवलोयोगी।।4।।

तस्मादात्मरूपो हि भव केवलम् ।।5।।

इह गेहे स्नेह बन्धन मर्थबन्धनं पुत्र कलत्रबन्धनं विविध सम्बन्ध बन्धन मज्ञान बन्धनादिकम्।।6।।

इतोऽशान्तिस्ततोऽप्यशान्ति रित्यशान्तिरेव केवला गृहेगृहे ।।7।।

रज्जुबद्धाः कारागारबद्धा वा विमुच्यन्ते, न विमुच्यन्ते मायाबद्धाः जन्मान्तरेष्वपि ।।8।।

शताधिक जन्मान्तरेभ्यः बद्धोऽसि ।।9।।

सर्वेषां भारमेवावहसि बलीवर्दवत् ।।10।।

नारायणस्तवान्तरे विराजते ।।11।।

प्रतीक्षते च त्वाम् ।।12।।

समर्पयात्मानं प्रसन्नमनसा ।।13।।

दिग्भ्रमाद्भाराक्रान्तो जातः ।।14।।

दृष्टे भगवति कृपामये भारः क्व ।।15।।

तमाराधय तमेव चिन्तय ।।16।।

त्यज देह गेहादिबन्ध भारम् ।।17।।

अभारोभव, आभारी च नारायणस्य ।।18।।

## ।। अर्था अनर्थाः ।।

संसारोऽय मर्थमूल इतिवदन्ति ।।1।।

अर्थोऽशेषानर्थ मूल इतिसत्यम् ।।2।।

अर्थमूला हि सर्वा वृत्तयोजगतः ।।3।।

तस्मादर्थस्य प्रधान्यम् ।।4।।

वित्तमायामयंजगत् ।।5।।

सर्वविस्मरणप्रदम् ।।6।।

तच्चंक्रारोपितास्सर्वे सुख मनु धावन्ति ।।7।।

धन लाभो हि सुख मिति मन्यमानाः ।।8।।

न प्रचुरं वित्तं लभ्यं सर्वैः ।।9।।

प्राप्तौ रक्षणमावश्यकम् ।।10।।

व्यये कृपणता मोहात् ।।11।।

चौरापहृति विवाद विनाशादि भयम् ।।12।।

भयरूपं हि वैभवम् ।।13।।

तथापि लोभ मोहाक्रान्ताः परिधावन्ति-कुतोऽधिकं धनं लभ्यम् ।।14।।

एवं हि दुःखार्णवं जगत् ।।15।।

न सुखं नवा शान्तिरर्थ मार्गे ।।16।।

संसार प्रग्रहो दुःखम् ।।17।।

तद्धेतुक धन संग्रहे दुःखम् ।।18।।

दुःखादि दुःखमध्यं दुःखान्तं चेदंजीवनम् ।।19।।

त्यज बह्वर्थवृत्ति मनर्थ मूलाम् ।।20।।

सीमित वित्तो भव ।।21।।

भावाभावयोर्मध्ये सन्तुष्टः ।।22।।

आकांक्षारहितोऽकिञ्चन इव ।।23।।

चतुर्थेवयसि वानप्रस्थः सन्यासो वा भवेद्

विवेकवत: ।।24।।

अदु:खा निर्बाधा शान्तिरत्र नूनम् ।।25।।

अल्प प्रयासेनासङ्गवृत्या भगवद् भक्त्या च नारायण लोकप्राप्ति: ।।26।।

---

## ।। स्नेह: ।।

एकेन स्नेहो भवेत् ।।1।।

परम कारुणिकेन स्नेहिना परमात्मना मायामयेनाज्ञान रूपेण संसारेण वा ।।2।।

पश्य, इह जगति चिन्ता दु:खं पराभव: विवाद: रोगोऽभाव: मृत्युर्हि ।।3।।

अज्ञानं स्वार्थवृत्ति: रिपव: स्वेषां वियोगोहि दरीदृश्यते सर्वत्र ।।4।।

असद्रूपं विनाशशीलं जागतिकं सुखं क्षणायैव।।5।।

मृगतृंष्णा समं हि तत् ।।6।।

दु:खादिकं तु बहुकालाय ।।7।।

दृष्टस्त्वयानुभूतश्च ।।8।।

नारायणः परमो दयालुः ॥9॥

नत्यजति शरणागतं कञ्चनापि ॥10॥

उद्धारयति सर्वदुःखेभ्यः ॥11॥

तदाराधनेनानायासेन ज्ञानोदयः ॥12॥

न मृत्युभीतिर्नवा चिन्ता ॥13॥

तेन प्रीतिर्विज्ञानालोक दर्शिका ॥14॥

तवाग्रे जगत् पृष्ठे नारायणःस्थितः ॥15॥

परावर्तितो भव संसार भावेभ्यः ॥16॥

पश्य परमात्मानं हृष्ट मनसा ॥17॥

न तत्र तमः क्वचित् ॥19॥

निःश्रेयसाय तमेव भज ॥20॥

---

## ॥ कथमपुनर्भवः ॥

अपुनर्भवो मुक्तिः कर्मबन्धनात् ॥1॥

सतु दशेन्द्रिय विजय मनोवशीकरणाष्टाङ्गयोग सिद्धि स्वरूपः ॥2॥

प्रमाथीनीन्द्रियाणि ॥3॥

दुर्जयमाकर्षणं तासु मनोयोगात् ।।4।।

अतद्धितेन तिष्ठतो हि दशेन्द्रिय विजयः।।5।।

रसः सर्वेन्द्रियोद्दीपकः ।।6।।

तस्माद्रसनाविजयप्रयासः प्रथमः ।।7।।

चञ्चलं मनः बल मिन्द्रियाणाम् ।।8।।

कठोर साधनयैव वशीकरणमस्य ।।9।।

कुम्भक प्रधान प्राणायामेन शवासनेन च भाव्यम्।।10।।

वैराग्य विवेकावत्र सहायकौ ।।11।।

माययाऽऽकृष्यते मनः ।।12।।

अलङ्घ्येय मविद्यात्मिका संसार बीज स्वरूपा।।13।।

तत्पारगो न लभते पुनर्जन्म ।।14।।

यद्यप्यपौरुषेयमिदं पौरुषम् ।।15।।

ज्ञानेन भक्त्या योगेन च नारायण प्रसादः।।16।

ततस्सर्व सिद्धिः ।।17।।

एषा परमा स्थितिः ।।18।।

अपुनर्भवत्वं च हस्तगतम् ।।19।।

## ।। कृषिकर्म सन्यासवृत्ति साम्यम् ।।

आत्म तत्त्व परिज्ञान ।विधि बोच्चकम् /

*पूर्व क्षेत्रस्य कर्षणं -*

पूर्वकालिक लौकिक वृत्तीनां समग्रोत्पाटनम्।।1।।

*परं विविधतृणाहरणं -*

षड्रिपुसहितायाः वासनायाःवाञ्छादीनामन्तः क्षेत्रादाहरणम् ।।2।।

*पौनःपुन्येन कर्षणं, लोष्ट्रादीनां समीकरणंज्ञान*
विज्ञानोत्पत्ति हेतवे मनसः बुद्धेश्च समीकरणम्।।3।।

*उर्वरक प्रक्षेपणं -*

प्रणव जपेन तयोस्सत्पात्रीकरणम् ।।4।।

*बीजारोपणं -*

गुरूपदिष्ट ज्ञानस्य हृद्यारोपणम् ।।5।।

*क्षेत्रचिन्ता -*

ध्यानम् ।।6।।

*वर्षणं देवस्य -*

महती भगवत् कृपा ।।7।।

*नवोत्पन्न विविध तृणोत्पाटनं -*

मनोगत प्रच्छन्न सांसारिकवृत्तीनामभीक्ष्णं संशोधनम् ।।8।।

*क्षेत्ररक्षणं -*

अन्तरायाणां निवारणम् ।।9।।

*पक्वीभूते सस्ये कर्तन मर्दनादिकं -*

अविद्यापरित्यागः ।।10।।

*अन्न सङ्ग्रहः -*

प्रज्ञान विज्ञानयोस्सङ्ग्रहस्स्वहृदि ।।11।।

*ब्रीहितुषापहरणं -*

जीव भावनाशः ।।12।।

*तण्डुलसम्पादनं -*

आत्मभाव प्रसादः ।।13।।

*भर्जनं पाचनं वान्नानां -*

हृदि सङ्गदोषजन्य संसारबीजानां पुनर्भव निवारणम् ।।14।।

*सिद्धान्नानां नारायणार्पणं -*

कर्तृत्व भोक्तृत्व भावानां ज्ञानाग्नौ होमः ॥15॥

यथा जगति, तथाहि सन्यासे ॥16॥

## ॥ अथ अनुभूत्यालोकः ॥

*ज्ञान महिमा -*

सहस्राधिकवर्षेभ्यः पिहित गृहान्धकारमेकदीप प्रज्वालनेन हि व्यापादितं भवति।

सहस्त्रसहस्त्रजन्मार्जितं पापाज्ञानादिकं हृदि ज्ञानोदयेन नाशमुपयाति।

तज्ज्ञानं शम दमोपरम तितिक्षा समाधान श्रद्धाभिरुपपादितं गुरुपदिष्टं च भवेत् ॥1॥

*विवेकमहिमा -*

यथाहिवन्यानि वृक्षाणि लोकेंगेहासन तल्पादि भोगकल्प विषयाणि।

वह्निसम्पर्केतु दीप्तिदाहकत्वसम्पन्नानि। एवं हि संसारिणो जनाः मनोबुद्धीन्द्रिय विषयानुगताः

सुखदुःख हर्षशोकादि द्वन्द्व भाव पराः कातराश्च। विवेकवतस्तु नष्टे लोक विषयेऽमलेहृदि दृष्टेपरे ब्रह्मणि तस्य ब्रह्मत्वमेव केवलम् ।।2।।

*शिवः -*

बहिरर्थभावाः स्थाणुषु शिवमन्वेषयन्ति नात्मगतम्। विज्ञानादन्तर्दृष्टि राप्यायंते। परं स्वास्मिन्नेव शिवः ।।3।।

*मुक्तिपदवी -*

क्षणिकानित्य सुखावहानां देहभावनांसम्यगवबोधे सुखदुःख दैन्यपरकाणां संसारभावानां सम्यगवबोधः। परं ज्ञान विज्ञानयोरुद्भवोऽन्तःकरणे, स्वानुभवः विवेक सिद्धिश्च। अतः परं नारायणबोधस्सरलतरः। एषामुक्तिपदवी।।4।।

*असङ्गमहिमा -*

यावद् हृदिस्वल्पापि संसारा सक्तिः, तावन्न परमात्मानुभूतिः।

असङ्गः पश्यति। असङ्गोहिपरमं ज्ञानमालभते।।5।।

*संसारानासक्तिः -*

संसाराद्दूरतरो भव। यावद् दूरतरः, तावल्लक्ष्यं समीपम्। सुदूरतमो हि संसारान्नित्यानन्दमयो भगवल्लोकः ।।6।।

*आत्मदर्शनम् -*

आत्मा हि ज्ञातव्योध्यातव्यः श्रोतव्योमन्तव्यः निदिध्यासितव्यश्च। सोऽभिवादार्हणः।

वृत्तिरहितेन सङ्कल्परहितेन च मनसा सूक्ष्म दृष्ट्या जगतोदर्शन मात्मदर्शन समम् ।।7।।

*ब्रह्मज्ञान महिमा -*

ज्ञाते ब्रह्मणि अमृतत्वोपलब्धिः

ब्रह्म भावानुभूतिः सच्चिदानन्ददत्वं चात्मनि।।8।।

*विश्वात्मानुभूतिः -*

अविद्यापराः विश्वात्मानमुपेक्षन्ते। अज्ञानिनः मोहान्धाः लोभपरायणाः। तैर्दृष्टोप्यदृष्ट इव,

श्रुतोऽप्यश्रुत इव, ज्ञातोऽप्यज्ञात स्वरूपो हि।
स नानुभूयते सांसारिकैः।
नारायणाशीः साधुसङ्गतिश्चानुभूति साधिके।
शमादि सम्पत् सिद्धिरष्टाङ्गयोगश्च ।।9।।

*विराग माहात्म्यम् -*

दुर्वहं संसार चक्रं दुःखदैन्य रुग्भीतिं पतना-
ज्ञानकारणम् ।
विरक्तिरस्मात् सर्वाशुभभाव ध्वंसिनी ज्ञान
विज्ञान साधिका परमात्म लोक प्रदा च ।।10।।

*शिवत्वम् -*

समस्त कर्मभाव लोपाच्छिवत्वम्।
स्वल्पशेषऽपि नैव सिद्धिः ।।11।।

*जीवः आत्मा -*

तुषहीनं हि तण्डुलम्। अविद्योपाधि रहितः
जीवोह्यात्मा, ज्ञान ज्योति सम्पन्नः सर्वदृष्टा
साक्षी च ।।12।।

*कीदृशं हृदयं स्यात् -*

कपट छलाछिद्ररहितं कारुणिकं हृदयं परमात्मभक्ति साधकं कैवल्य प्रदञ्च ॥13॥

*ब्रह्म ज्ञानम् -*

ज्ञाते ब्रह्मणि अज्ञातबोधोत्पत्तिर्मनसि, सौम्य भावोदयः अलौकिका वृत्तिः, परमाशान्तिः, स्थिरभावस्तेजस्विता च ॥14॥

*सर्वेन्द्रिय विजयी -*

प्राणायाम परोऽजिह्वश्च मनोविजये समर्थः। सहि सर्वेन्द्रिय विजयी ॥15॥

*ज्ञानोपलब्धिः कीदृशी -*

मनन मनुशीलनमनुभूतिश्च वेदान्ततत्त्वानां ज्ञानोपलब्धिः। नतु शब्दसंघात स्मरण मात्रम्। तदनुष्ठानं हि सिद्धिदम् ॥16॥

*ज्ञानम् -*

यत्र येन यद्वामिलति, सर्वमपि ज्ञानंग्राह्यम्।

'उत्तमानां तु विज्ञानं गुरुशास्त्रानपेक्षणम्' इतित्रिपुरारहस्ये।।17।।

*सच्चिदानन्दोत्सवः -*

पत्र पातात्परं नवकिसलयैर्वसन्तोत्सवः। कर्मत्यागात् परं स्वात्मनि सच्चिदानन्दोत्सवः।।18।।

*ज्ञानस्थापनं कथम् -*

पूर्वंपात्रविशोधनम्। ततः परं समतले भूमौस्थापनम्। अनन्तरं वस्तु संस्थापनम्। एवं हि ज्ञान क्षेत्रेऽपि ।।19।।

*मनसश्चञ्चलता -*

मनसश्चाञ्चल्यं दोषः। ततो हृच्चाञ्चल्यं महारोगः। एष हृद्रोगो मृत्युहेतुर्जगति वेदान्ते च।।20।।

*कर्मविसर्जनम् -*

वित्तविसर्जनादापणस्थं सर्वं प्राप्नोतीप्सितम्। एवं ह्यशेष कर्म विसर्जनाद् ब्रह्मभावः सम्पद्यते।।21।।

*करुणा महिमा -*

विश्वात्मा जगन्निवासः। प्राणिनां सेवा तस्यैव हि। सा कारुणिकवृत्त्या तत्परायण मनसा च कर्तव्या।

परम कारुणिकोऽसौकारुणिकान् बहु मन्यते।।22।।

*ज्ञान प्रकाशः -*

विद्युद् वटकात्मकं प्रकाश यन्त्रं सर्वतः व्यवस्थितमपि न प्रकाशकरम् । तन्नाभिदेशे प्रपीडनाद्धि प्रकाशकम्।

इन्द्रिय लौल्यस्य चञ्चलस्य मनसः प्राणायामेन प्रपीड-नाद् वशीभूतस्य ज्ञान प्रकाशोदयः सम्पद्यते।।23।।

*अप्रलपनम् -*

तीव्र ज्वरार्दितः मायाबद्धश्च प्रलपति, दिव्यौषधि सत्सङ्गाभ्यामप्रलपनं द्वयोः ।।24।।

*श्रद्धामाहात्म्यम् -*

श्रद्धाप्तोपदेशाभ्यां ज्ञानाप्तिः ।

पाठशालायां 'क' इति पाठिते तथैव मन्यमानः बुधोभवति। तर्काश्रयत्वमिहबाधकम् ।।25।।

*अनुभूति माहात्म्यम् -*

क्षेत्रोत्पन्नाब्रीहिर्मर्दनादपलालापि नागता गृहमपार्थका।

शमदमादुपजातं गुरुपदिष्टं च ज्ञानं नानुभूति-सम्पन्नं तथैव ।।26।।

*जगद्भाव स्वरूपम् -*

येन जगद्भावेन मूर्खस्यरागउपजायते, तेन हि विरागिनो विराग सिद्धिः ।।27।।

*निवृत्तिः -*

प्रवृत्तिमार्गोऽनन्त दुःखहेतुः। निंवृत्तिर्महाफला नित्यसुखावहा परमात्मबोधहेतुश्च ।।28।।

*दुःखोपेक्षा माहात्म्यम् -*

सुखेच्छा दुःख वाहिका।

दुःखोपेक्षा शान्ति सन्तोष दायिनी ।।29।।

*ज्ञान नेत्र महिमा -*

भक्ष्य भोज्य पूर्णेऽपि राजप्रासादे नैव किञ्चिल्लभ्यं नेत्रहीनेन।
ज्ञाननेत्रहीनेन स्वर्गेऽपि न सुखं सुगमम् ।।30।।

*सज्ज्ञान महिमा -*

जलार्द्रोऽङ्गारः कृष्णवर्णः। वह्निसम्पर्कभङ्गात्। पुनरग्नि संयोगेन दीप्तिदाहकत्वपूर्णोऽङ्गोराहिं। एवं हि जनाः विस्मृतात्मज्ञानाः सांसारिकाः सुख दुःखादिपराः दीनाश्च। सज्ज्ञानलाभादमृत-स्वरूपाः सच्चिदानन्दा एव ।।31।।

*जगत् सेवनम् -*

अविद्या निरूपितस्य जगतः सेवनादज्ञानं भ्रान्तिः मृत्युर्पुनर्जन्म प्रारब्ध भोगश्च सुख दुःख परकः। तत्त्वतो दर्शनादस्य हृच्छुद्धिः श्रद्धा विश्वासयोरुत्पत्तिः ज्ञानं भगवद् भक्तिः परमात्म बोधश्च ।।32।।

*अणुः शक्तिधरः -*

अति पारमाणवीय गुटिका सम्पर्केण घटीयन्त्रं यथा कालं चलति। तदभावे तदभावः। सर्वशक्तिधरे हृषीकेशे हृद्यवस्थिते पिण्डदेहश्चलति। तदुत्क्रमणे मृत्युः। सतु परमाणुतोऽपि लक्षगुणोन्यूनरूपः। नारायणोऽणुरूपः सर्वत्र स्थितः। स्थूलेऽल्पा शक्तिः। अणोरणीयान् सर्वशक्तिमान् ।।33।।

*अहङ्कारः -*

प्रेत सञ्चारे प्रेतो हि वदति, नतु तद्ग्रहीतः। अहङ्कारगृहीत स्याहङ्कारो हिवदति, नतु जनः। तन्मुक्तः सुशान्तो भवति। एवं भूता हि काम क्रोधादि गृहीतानामपि स्थितिः ।।34।।

*स्वावबोधः -*

नद्याः पारंगतास्सर्वे नव हि गणयन्ति, नात्मानं दशमम्। अन्येन गणिता दश भवन्ति। एष

आप्तोपदेशः स्वावबोधः भ्रम निवारणञ्च ।।35।।

*जगद्भावः कीदृशः ?*

पक्षिणः शावकान् स्नेहेन पालयन्ति,

यावत् पक्षयोर्दृढत्वम्।

पश्चाच्चञ्चु प्रहारेण निष्कासयन्ति,

एष जगद् भावः ।।36।।

*एकारूढो भवेत् -*

नौकारूढो न शकटा रूढो युगपत् कालम्।

यतिर्न व्रत सङ्कल्पादि परायणः कर्म परायणो वा। एकारूढो गतिमान् ।।37।।

*प्राप्ते ज्ञानेशास्त्रस्य स्थितिः -*

नृपति पद प्रतिष्ठितः कृषिकर्म नारभते स्वीयम्। एवं हि यति र्नागमादरपरः ।।38।।

*उपवासः -*

गृहाश्रमिण उपवासोऽन्नत्यागः।

यतेरुपवासः -उप-समीपे वासः परमात्मनः।।39।।

*मनःगरलम् -*

गरलं सर्वस्य मृत्युकारणम्। सम्यक् शोधितं तु रोगापहारकं प्राणदञ्च। स्वास्थ्यप्रद युर्दमपि। चञ्चलं मनो विषमुल्वणम्। ज्ञान विज्ञान प्रच्छालितं सुशोधितं तपो योगादिभिः सर्वार्थदमात्मबलदममृत प्राप्तिहेतुश्च। संसार पङ्ककलङ्कितं मनः दैन्य दुर्भाग्य-दारिद्रयादि कारणं प्रेत्य च नरक वासाय।।40।।

*परिवर्तितंमनः -*

परावर्तिते पात्रे नतुवस्तुस्थितिः।

अविद्यया परावर्तिते मनसि नैवाध्यात्मज्ञानस्य सुस्थितिः ।।41।।

*माया दर्शनं कीदृशम् -*

हरितोपनेत्रवतः सर्वस्यापि जगतः हरितत्वम्। मायोपनेत्रवतः जीवस्य मायामयमेव दर्शनमखिले जगति ।।42।।

*प्रमादालस्य त्यागः -*

ब्रीहिपूर्णोगृही बुभुक्षितश्शेते। तण्डुल सम्पादने सालस्यात्। एवमविद्या भ्रान्तानामपि स्थितिः। प्रमादालस्यत्यागादेव हृदिज्ञान, विज्ञानोदयः नारायणकृपोपलब्धिश्च ।।43।।

*स्वीयपरकीयौ -*

स्व सांसारिक वृत्तीन् साधयति इतिस्वीयः परकीयोऽन्योऽन्योपेक्षकः। एषा स्वकीय परकीय भावना ।।44।।

*विम्बप्रतिबिम्बभावः -*

रागद्वेषादयो त्वयि, नतु तव प्रतिबिम्बे। प्रतिबिम्बमेव भव सर्वोपेक्षकः ।।45।।

---

सर्वनिःश्रेयसकरं, भवरोग निवारणम्।
ज्ञानालोकप्रदं पुण्यं, भूयाद् विश्वात्म दर्शनम्
परिपूर्णोऽयं सूत्रग्रन्थः ।।

## सम्मतिः

जगद्गुरु पदवी समलङ्कृतानां परापराविद्या प्रवीणानां ज्ञान निधीनां वाणी विभूतिमतां श्रीमतां स्वामिवर्यं कपिलेश्वरानन्द सरस्वती महोदयानां "विश्वात्मदर्शनम्" नामकाय सूत्रग्रन्थायाशिषस्सम्मतिश्च—

सुसम्मतिपुरस्सरा सदासर्वथासुसम्मतं भवेद्—
"विश्वात्मदर्शनम्" श्रेयस्करं समेषां मुदावहम्।
आत्मवत् प्रियं विश्वेषामध्यात्म मार्गप्रदर्शने,
सरस्वती प्रेमभाजो विश्वरूपाश्च भूतले॥
पर्यालोचनयापि श्रेयः सततं भवेत्,
शाश्वतिकी उत्तमाशिषा।

स्वयं हस्ताक्षरम्—

स्वामी कपिलेश्वरानन्द सरस्वती

प्रतीक्षताम्—

१—विश्वात्मदर्शनग्रन्थस्य
हिन्दी टीका

२—ब्रह्म रश्मिः
अध्यात्म साधना
ज्ञानोपलब्धि संहिता
परिशिष्ट भागे—
'सन्यास महाव्रत'
हिन्दी भाषायाम्

सर्वं विश्वरूपानन्दसरस्वतीकृतम्

पवन पुत्र प्रिन्टिंग प्रेस, आनन्द नगर कालोनी, कन्दवा, वाराणसी
Ph. 319934